१४१ । तूलोपलतालकुसूलतरलकम्बलदेवलवृषलाः पुंसि । अयं तूलः ।

१४२ । शीलमूलमङ्गलसालकमलतलमुसलकुण्डलपललमृणालवालनिगलपलालविडालखिलशूलाः पुंसि च । चात्क्लीबे । इदं शीलम्-शीलः । इत्यादि ।

१४३ । शतादिः सङ्ख्या । शतम् । सहस्रम् । 'शतादिः' इति किम् ? एकः, द्वौ, बहवः । 'सङ्ख्या' इति किम् ? शतशृङ्गो नाम पर्वतः ।

१४४ । शतायुतप्रयुताः पुंसि च । अयं शतः - इदं शतम् । इत्यादि ।

१४५ । लक्षा कोटिः स्त्रियाम् । इयं लक्षा । इयं कोटिः । 'वा लक्षा नियुतं च तत्' इत्यमरात्क्लीबेऽपि, लक्षम् ।

१४६ । शङ्कुः पुंसि ।

१४७ । सहस्रः क्वचित् । अयं सहस्रः—इदं सहस्रम् ।

१४८ । मन्द्व्यच्कोऽकर्तरि । मन्प्रत्ययान्तो द्व्यच्कः क्लीबः स्यान्न तु कर्तरि । वर्म । चर्म । 'द्व्यच्कः' किम् ? अणिमा । महिमा । 'अकर्तरि' किम् ? ददाति इति दामा ।

१४९ । ब्रह्मन्पुंसि च । अयं ब्रह्मा – इदं ब्रह्म ।

१५० । नामरोमणी नपुंसके । 'मन्द्व्यच्कः–' (लि. सू. १४८) इत्यस्यायं प्रपञ्चः ।

१५१ । असन्तो द्व्यच्कः । यशः । मनः । तपः । 'द्व्यच्कः' किम् ? चन्द्रमाः ।

१५२ । अप्सरसः स्त्रियाम् । एता अप्सरसः । प्रायेणायं बहुवचनान्तः ।

१५३। त्रान्तः। पत्रम्। छत्रम्।

१५४। यात्रामात्राभस्त्रादंष्ट्रावरत्राः स्त्रियामेव।

१५५। भृत्रामित्रछात्रपुत्रमन्त्रवृत्रमेढ्रोष्ट्राः पुंसि। अयं भृत्रः। न मित्रममित्रः। 'तस्य मित्राण्यमित्रास्ते' इति माघः। 'स्यातामामित्रौ मित्रे च' इति च। यत्तु 'द्विषोऽमित्रे' (सू. ३१११) इति सूत्रे हरदत्तेनोक्तम्—'अमेर्द्विषत्' (उ. सू. ६१३) इत्यौणादिक इत्रच्। 'अमैरमित्रं मित्रस्य व्यथयेत्' इत्यादौ मध्योदात्तस्तु चिन्त्यः। नञ्समासेऽप्येवम्। परवल्लिङ्गताऽपि स्यादिति तु तत्र दोषान्तरमिति, तत्प्रकृतसूत्रापर्यालोचनमूलकम्। स्वरदोषोद्भावनमपि 'नञो जरमरमित्रमृताः' (सू. ३८५०) इति षाष्ठसूत्रास्मरणमूलकमिति दिक्।

१५६। पत्रपात्रवित्रसूत्रच्छत्राः पुंसि च।

१५७। बलकुसुमशुल्वयुद्धपत्तनरणाभिधानानि। बलं वीर्यम्।

१५८। पद्मकमलोत्पलानि पुंसि च। पद्मादयः शब्दाः कुसुमाभिधायित्वेऽपि द्विलिङ्गाः स्युः। अमरोऽप्याह—'वा पुंसि पद्मं नलिनम्' इति। एवं च 'अर्धर्चादिसूत्रे तु जलजे पद्मं नपुंसकमेव' इति वृत्तिग्रन्थो मतान्तरेण नेयः।

१५९। आहवसङ्ग्रामौ पुंसि।

१६०। आजिः स्त्रियामेव।

१६१। फलजातिः। फलजातिवाचिशब्दो नपुंसकं स्यात्। आमलकम्। आम्रम्।

१६२। वृक्षजातिः स्त्रियामेव। क्वचिदेवेदम्। हरीतकी।

१६३। वियज्जगत्सकृच्छकृत्पृषच्छकृद्यकृदुदश्वितः। एते क्लीबाः स्युः।

१६४। नवनीतावतानृतामृतनिमित्तवित्तचित्तपित्तव्रतरजतवृत्तपलितानि।

१६५। श्राद्धकुलिशदैवपीठकुण्डाङ्गदधिसक्थ्यक्ष्यस्थ्यास्पदाकाशकण्वबीजानि। एतानि क्लीबे स्युः।

१६६। दैवं पुंसि च। दैवम्-दैवः।

१६७। धान्याज्यसस्यरूप्यपण्यवर्ण्यधृष्यहव्यकव्यकाव्यसत्यापत्यमूल्यशिक्यकुड्यमद्यहर्म्यतूर्यसैन्यानि। इदं धान्यम्। इत्यादि।

१६८। द्वन्द्वबर्हदुःखबडिशपिच्छबिम्बकुटुम्बकवचवरशरवृन्दारकाणि।

१६९। अक्षमिन्द्रिये। इन्द्रिये किम्? रथाङ्गादौ मा भूत्।

इति नपुंसकाधिकारः।

१७०। स्त्रीपुंसयोः। अधिकारोऽयम्।

१७१। गोमणियष्टिमुष्टिपाटलिवस्तिशाल्मलित्रुटिमसिमरीचयः। इयमयं वा गौः।

१७२। मृत्युसीधुकर्कन्धुकिष्कुकण्डुरेणवः। इयमयं वा मृत्युः।

१७३। गुणवचनमुकारान्तं नपुंसकं च। त्रिलिङ्गम् इत्यर्थः। पटु-पटुः-पट्वी।

१७४। अपत्यार्थतद्धिते। औपगवः-औपगवी। इति स्त्रीपुंसाधिकारः।

१७५। पुंनपुंसकयोः। अधिकारोऽयम्।

१७६। घृतभूतमुस्तक्ष्वेलितैरावतपुस्तबुस्तलोहिताः। अयं घृतः-इदं घृतम्।

१७७। शृङ्गार्घनिदाघोद्यमशल्यदृढाः। अयं शृङ्गः। इदं शृङ्गम्।

१७८। व्रजकुञ्जकुथकूर्चप्रस्थदर्पार्भार्धर्चदर्भपुच्छाः। अयं व्रजः- इदं व्रजम्।

१७९ । कबन्धौषधायुधान्ताः । स्पष्टम् ।

१८० । दण्डमण्डखण्डशवसैन्धवपार्श्वाकाशकुशकाशाङ्कुशकुलिशाः । एते पुंनपुंसकयोः स्युः ।

'कुशो रामसुते दर्भे योक्त्रे द्वीपे कुशं जले' इति विश्वः ।

शलाकावाची तु स्त्रियाम् । तथा च 'जानपद-' ( सू. ५०१ ) आदिसूत्रेणायोविकारे ङीपि कुशी । दारुणि तु टाप्-'कुशा वानस्पत्याः स्थ ता मा यातं' इति श्रुतिः । 'अतः कृकमि-' (सू. १६०) इति सूत्रे 'कुशाकर्णीषु' इति प्रयोगश्च । व्याससूत्रे च-'हानौ तूपायनशब्दे शेषत्वात्कुशाच्छन्दः' इति । तत्र शारीरकभाष्येऽप्येवम् । एवं च श्रुतिसूत्रभाष्याणामेकवाक्यत्वे स्थिते 'आच्छन्दः' इत्यङ्प्रश्लेषादिपरो भामतीग्रन्थः प्रौढिवादमात्रपर इति विभावनीयं बहुश्रुतैः ।

१८१ । गृहमेहदेहपट्टपटहाष्टापदाम्बुदककुदाश्च ।

इति पुंनपुंसकाधिकारः ।

१८२ । अवशिष्टलिङ्गम् ।

१८३ । अव्ययं कतियुष्मदस्मदः ।

१८४ । ष्णान्ता सङ्ख्या । शिष्टा परवत् । एकः पुरुषः । एका स्त्री । एकं कुलम् ।

१८५ । गुणवचनं च । शुक्लः पटः । शुक्ला पटी । शुक्लं वस्त्रम् ।

१८६ । कृत्याश्च ।

१८७ । करणाधिकरणयोर्ल्युट् ।

१८८ । सर्वादीनि सर्वनामानि । स्पष्टार्थेयं त्रिसूत्री ।

इति लिङ्गानुशासनप्रकरणम् ।

इति श्रीभट्टोजिदीक्षितविरचिता वैयाकरणसिद्धान्तकौमुदी समाप्ता ।



# सिद्धान्तकौमुद्याः
# अकारादिक्रमसूत्रसूची

इत्यष्टाध्यायीसूत्राणां सूची ।

# धातूनामकारादिक्रमसूची

* पृ. ६१८ ।
† पृ. ६२६ ।
‡ पृ. ६२६ ।

* पृ. ६०६ ।

* पृ. ५१९७

* पृ. ६२५ ।

† पृ. ५८९ ।

* पृ. ६२५ ।

*पृ. ८९।

*पृ. ५९६।

*पृ. ६२९।

*पृ. ६०१ ।

*पृ. ५५५।

इति धातूनामकारादिक्रमसूची

## बालकोपयोगी विद्वत्सम्मानित ग्रन्थाः—

| | |
|---|---|
| प्रथमा-व्याकरणम्-विसर्गसन्ध्यन्त संस्कृत-हिन्दी व्याख्योपेत लघुकौमुदी सहित नवीन नियमावली निर्धारित सभी विषयों से अलकृत बालकोपयोगी सर्वांगपूर्ण प्रथमा परीक्षा पाठ्य ग्रन्थ | शीघ्र |
| लघुकौमुदी-'इन्दुमती' सं० हि० टी० नोट्स, सहित | ६-०० |
| सिद्धान्तकौमुदी-'इन्दुमती' टीका कारकान्त | ६-०० |
| रूपचन्द्रिका-(शब्दों तथा धातुओं के रूपावली) | १०-०० |
| रघुवंश-'संजीविनी' सहित 'इन्दुमती' सं० हिन्दी टीका १-५ सर्ग। प्रत्येक सर्ग २-५०, ६-७ सर्ग | ४-०० |
| रघुवंश-प्रश्नोत्तरी-प्रथम सर्ग २-००, २-३ सर्ग | २-५० |
| छन्दश्चन्द्रिका-प्रथमा निर्धारित, छन्दः ग्रन्थ | ०-७५ |
| संस्कृतरचनानुवादशिक्षक-प्रथमपरीक्षा स्वीकृत | ३-५० |
| सन्धि-चन्द्रिका-बालकोपयोगी संस्करण | ३-०० |
| संस्कृत व्याकरण प्रबोध-प्र० भा० ३-००, द्वि०भा० | ५-०० |
| हितोपदेश-मित्रलाभ-'किरणावली' सं०हि० टीका | ४-५० |
| तर्कसंग्रह-लक्षण टिप्पणी 'इन्दुमती' हिन्दी टीका | १-५० |
| अमरकोष-'मणिप्रभा' हिन्दी टीका प्र० काण्ड | २-०० |
| राष्ट्रभाषा सरल हिन्दी व्याकरण-केदारनाथ शर्मा | २-०० |
| बृहत् संस्कृत शिक्षा वाटिका-२-४ भाग | ४-०० |
| नीतिशतक-ललिता-बाला सं० हि० टीका | २-५० |

चौखम्बा संस्कृत सीरीज आफिस, वाराणसी-१